# तैत्तिरीयप्रातिशाख्य

अथ वर्णसमाम्नायः १ अथ नवादितः समानाक्षराणि २ द्वेद्वे सवर्णे ह्रस्वदीर्घे ३ न प्लुतपूर्वम् ४ षोडशादितः स्वराः ५ शेषो व्यञ्जनानि ६ आद्याः पञ्चविँशति स्पर्शाः ७ पराश्चतस्त्रोऽन्तस्थाः ८ परे षडूष्माणः ९ स्पर्शानामा-नुपूर्व्येण पञ्चपञ्च वर्गाः १० प्रथमद्वितीयतृतीयचतुर्थोत्तमाः ११ ऊष्मविस-र्जनीयप्रथमद्वितीया अघोषाः १२ न हकारः १३ व्यञ्जनशेषो घोषवान् १४ आप्रावोपाभ्यधिप्रतिपरिविनीत्युपसर्गाः १५ वर्णः कारोत्तरो वर्णाख्या १६ अकारव्यवेतो व्यञ्जनानाम् १७ न विसर्जनीयजिह्वामूलीयोपध्मानीयानुस्वा-रनासिक्यानाम् १८ एफस्तु रस्य १९ ह्रस्वो वर्णोत्तिरस्त्रयाणाम् २० अकारो व्यञ्जनानाम् २१ ग्रहणस्य २२ अःकार आगमविकारिलोपिनाम् २३ ग्रहणं वा २४ आसन्नँ संदेहे २५ अनेकस्यापि २६ प्रथमो वर्गोत्तरो वर्गाख्या २७ अं विकारस्य २८ पूर्व इति पूर्वः २९ पर इत्युत्तरः ३० ऋकारल्कारौ ह्रस्वौ ३१ अकारश्च ३२ तेन च समानकालस्वरः ३३ अनुस्वारश्च ३४ द्विस्तावान्दीर्घः ३५ त्रिः प्लुतः ३६ ह्रस्वार्धकालं व्यञ्जनम् ३७ उच्चैरुदात्तः ३८ नीचैरनुदात्तः ३९ समाहारः स्वरितः ४० तस्यादिरुच्चैस्तरामुदात्तादन्तरे यावदर्धँ ह्रस्वस्य ४१ उदात्तसमः शेषः ४२ सव्यञ्जनोऽपि ४३ अनन्तरो वा नीचैस्तराम् ४४ अनुदात्तसमो वा ४५ आदिरस्योदात्तसमः शेषोऽनुदा-त्तसम इत्याचार्याः ४६ सर्वः प्रवण इत्येके ४७ नानापदवदिंग्यमसंख्याने ४८ तस्य पूर्वपदमवग्रहः ४९ पदग्रहणेषु पदं गम्येत ५० अपि विकृतम् ५१ अप्यकारादि ५२ अन्कारादि च ५३ एकवर्णः पदमपृक्तः ५४ आद्यन्तवच्च ५५ वर्णस्य विकारलोपौ ५६ विनाशो लोपः ५७ अन्वा-देशोऽन्त्यस्य ५८ उपबन्धस्तु देशाय नित्यम् ५९ नानापदीयं च निमित्तं प्रग्रहस्त्रादिषु ६० यथोक्तं पुनरुक्तं त्रिपदप्रभृति त्रिपदप्रभृति ६१

इति प्रथमोऽध्यायः

अथ शब्दोत्पत्तिः १ वायुशरीरसमीरणात्कण्ठोरसोः संधाने २ तस्य प्राति-श्रुत्कानि भवन्त्युरः कण्ठः शिरो मुखं नासिके इति ३ संवृते कण्ठे नादः क्रियते ४ विवृते श्वासः ५ मध्ये हकारः ६ ता वर्णप्रकृतयः ७ नादोऽनुप्रदनँ

स्वरघोषवत्सु ८ हकारो हचतुर्थेषु ९ अघोषेषु श्वासः १० भूयान्प्रथमेभ्योऽन्येषु ११ अवर्णे नात्युपसँहृतमोष्ठहनु नातिव्यस्तम् १२ ओकारे च १३ ओष्ठौ तूपसँहृततरौ १४ ईषत्प्रकृष्टावेकारे १५ उपसँहृततरे हनू १६ जिह्वामध्यान्ताभ्यां चोत्तराञ्जम्भ्यान्त्स्पर्शयति १७ उपसँहृततरे च जिह्वाग्रमृकारर्कारल्कारेषु बर्स्वेषूपसँहरति १८ एकेषामनुस्वारस्वरभक्त्योश्च १९ अनादेशे प्रणयस्ता जिह्वा २० अकारवदोष्ठौ २१ तालौ जिह्वामध्यमिवर्णे २२ एकारे च २३ ओष्ठोपसँहार उवर्णे २४ एकान्तरस्तु सर्वत्र प्रकृतात् २५ अकारार्धमैकारौकारयोरादिः २६ संवृतकरणतरमेकेषाम् २७ इकारोऽध्यर्धः पूर्वस्य शेषः २८ उकारस्तूत्तरस्य २९ अनुस्वारोत्तमा अनुनासिकाः ३० स्वराणा यत्रोपसँहारस्तत्स्थानम् ३१ यदुपसँहरति तत्करणम् ३२ अन्येषां तु यत्र स्पर्शनं तत्स्थानम् ३३ येन स्पर्शयति तत्करणम् ३४ हनूमूले जिह्वामूलेन कवर्गे स्पर्शयति ३५ तालौ जिह्वामध्येन चवर्गे ३६ जिह्वाग्रेण प्रतिवेष्ट्य मूर्धनि टवर्गे ३७ जिह्वाग्रेण तवर्गे दन्तमूलेषु ३८ ओष्ठाभ्यां पवर्गे ३९ तालौ जिह्वामध्यान्ताभ्यां यकारे ४० रेफे जिह्वाग्रमध्येन प्रत्यग्दन्तमूलेभ्यः ४१ दन्तमूलेषु च लकारे ४२ ओष्ठान्ताभ्यां दन्तैर्वकारे ४३ स्पर्शस्थानेषूष्माण आनुपूर्व्येण ४४ करणमध्यं तु विवृतम् ४५ कण्ठस्थानौ हकारविसर्जनीयौ ४६ उदयस्वरादिसस्थानो हकारं एकेषाम् ४७ पूर्वान्तसस्थानो विसर्जनीयः ४८ नासिक्या नासिकास्थानाः ४९ मुखनासिक्या वा ५० वर्गवच्चैषु ५१ नासिकाविवरणादानुनासिक्यंनासिकाविवरणादानुनासिक्यम् ५२

इति द्वितीयोऽध्यायः

अथादावुत्तरे विभागे ह्रस्वं व्यञ्जनपरः १ देवाशीकासुम्नाश्वर्तावयुनाहृदयाघोक्थाशुद्धा २ इन्द्रा वद्वन्वान्परः ३ चित्रा वपरः ४ प्रस्थेन्द्रियाद्रविणाविश्वदेव्यादीर्घावीर्याविश्वावातात्वाभङ्गुराकर्णकावृष्णियासुगोपर्कसामाघासत्रावर्षापुष्पामेघाप्रास्वा ५ लोकएवेष्टा ६ शक्तीरथीत्विषीवाशीरात्र्योषध्याहुतीव्याहृतीस्वाहाकृतीह्वादुनीशचीचितीश्रोणीपृष्टीपूत्यभीचर्षणीपर्यधीपारीशत्रू विषूवसूअनूहनूसूविभू इत्यवग्रहः ७ अवासचस्वानुदामृडावर्धाशिक्षारक्षाद्याभवाभजायत्राचरापिबानाधामाधारयाधर्षाघावर्धयाबोधात्रातत्रामुञ्चाश्वस्या पृणस्वाहिष्ठात्वंतराजनिष्वायद्वाछा ८ अधाग्नियाज्ये ९ कुत्रादक्षिणेनास्वेनाहन्तनाजगामारुहेमाविद्मध्यामाचकृमाक्षामास्तरीमाभरेमावर्षयथेरयथारि-

थापाथाथासिञ्चथाजनयथाजयतोक्षतावतायाताशृणुताकृणुताबिभृता १० भरता याज्यासु ११ अत्ताभवतानदतातरतातपताजुहुतावोचतामुञ्चताचृताघुष्याजनयावर्तयासादयापारयादीयाहराभरापाससादासृजातिष्ठायेना १२ उश्मसीक्रयीकृधीश्रुधीयदी १३ सूतूनूमिथूमक्षूऊ १४ व्युत्पूर्व आननुदात्तोऽनूष्मवत्यनूष्मवति १५

इति तृतीयोऽध्यायः

अथ प्रग्रहाः १ नावग्रहः २ अन्ताः ३ इतिपरोऽपि ४ ऊकारः ५ ओकारोऽसाँहितोऽकारव्यञ्जनपरः ६ समहदथपितृपूर्वश्च ७ अथैकारेकारौ ८ अस्मे ९ त्वे इत्यनिंग्यान्तः १० देवते-उभे-भागधे-ऊर्ध्वे-विशाखे-शृङ्गे-एनेमेध्ये-तृणे-तृद्ये-कनीनिके-पार्श्वे-शिवे-चोत्तमे-एवोत्तरे-शिप्रे-रथंतरेवत्सरस्यरूपे-विरूपे-विषुरूपे-सदोहविर्धाने-अधिषवणे-अहोरात्रे-धृतव्रते-स्तुतशस्त्रे-ऋक्सामे-अक्तेअर्पिते-रैवते-पूर्ते-प्रत्ते-विधृते-अनृते-अछिद्रे-बहुले-पूर्वजे-कृणुध्वँसदने ११ अमी-चक्षुषी-कार्ष्णी-देवताफल्गुनी-मुष्टी-धी-नाभी-वपाश्रपणी-अहनी-जन्मनी-सुम्निनी-सामनी-वैष्णवी-ऐन्नवी-दर्वी-द्यावापृथिवी १२ पूर्वश्च १३ न रुन्धे नित्यम् १४ हरीसहुरीसहूतीकल्पयन्तीआपृषतीआहुती १५ पूर्वश्च १६ वाससीतपसीरोदसी १७ परश्च १८ व्यचस्वतीभिरिष्यन्तीनःपृथिवी १९ येअप्रथेतामुर्वीतेअस्यियंक्रन्दसीछन्दस्वतीतेआचरन्तीअन्तरैतासु २० नोपस्थे २१ इरावतीप्रभृत्या दाधार २२ पूर्वजेप्रभृत्यायम् २३ इमे गर्भमुपैवरसेनपरः २४ क्रूरमापःसजूर्ब्रह्मजैतेषु च २५ पूर्णे २६ दृढे २७ घ्नीचक्रे पपरे २८ न्वती २९ पपरो न ३० समीची ३१ नपरो न ३२ ची यत्प्रपरः ३३ आन्मही ३४ पती श्रुतिः ३५ म्री ३६ न हिपरः ३७ वीड्द्वारौकृष्णाश्चरावोयदापरः ३८ न ज्ञेऽह्ने नित्यम् ३९ आकारैकारपूर्वस्तु बहुस्वरस्य ते थे ४० न शार्याते ४१ ते मापातंनमएनमभिवायुर्गर्भमुपाहस्तुपरः ४२ अनुदात्तो न नित्यम् ४३ एते तनुवौवैसमेवहियज्ञपदिष्टक्परः ४४ परश्च द्वयोः ४५ स्थःपरः ४६ परश्चोभयोः ४७ सोमायस्वैतस्मिन् ४८ द्वे ४९ परश्च ५० एकव्यवेतोऽपि ५१ गमयतोभवतोऽनूकारात्परंतनूयदकरोत्कुर्यादिष्टिष्वब्रूतांप्रवर्तास्ताँस्तभ्नीतांवाचयतिबिभृतस्ताग्निंगायत्रंताभ्यामेवोभाभ्यामवान्तरंपर आ षष्ठात् ५२ न ग्रामीवर्चसीमिथुनीमासेलोकेधत्ते ५३ अते समानपदे नित्यमवे चावे च ५४

इति चतुर्थोऽध्यायः

अथ सँहितायामेकप्राणभावे १ यथायुक्ताद्विधिः साप्रकृतिः २ तत्र पूर्वंपूर्वं प्रथमम् ३ त्रपुमिथुपूर्वः शकरश्चपरः ४ सुपूर्वश्च चन्द्रपरः ५ संपूर्वः सकारः कुरुपरः ६ अकुर्व च प्रत्ययात्परः ७ नीचापूर्वो दकार उच्चापरः ८ असंपूर्वोऽरमृकारः ९ अवग्रह आशीर्धूःसुवरिति रेफं परः सकारः षकारम् १० अथ लोपः ११ ईंपूर्वो मकारः १२ तुनुपूर्व उदात्तयोर्वकारः १३ उत्पूर्वः सकारो व्यञ्जनपरः १४ एषसस्य इति च १५ नासः १६ इद्विदग्नैमांनएनौषधीःपरः सः १७ अवग्रह इत्येकम् १८ तिष्ठन्त्येकया सपूर्वः १९ न कारः शकारं चपरः २० नायन्नैरयन्नार्ध्रुवन्ननड्वान्घृणीवान्वारुणानेवास्मिन् २१ तकारश्च-कारँ शचछपरः २२ जपरो जकारम् २३ नकार एतेषु ञकारम् २४ लपरौ लकारम् २५ नकारोऽनुनासिकम् २६ मकार स्पर्शपरस्तस्य सस्थानमनुना-सिकम् २७ अन्तस्थापरश्च सवर्णमनुनासिकम् २८ न रेफपरः २९ यवकार-परश्चैकेषामाचार्याणाम् ३० उत्तमलभावात्पूर्वोऽनुनासिक इत्यात्रेयः ३१ ङपूर्वः ककारः सषकारपरः ३२ टनकारपूर्वश्च तकारः ३३ स्पर्शपूर्वः शकार-श्छकारम् ३४ न मकारपूर्वः ३५ पकारपूर्वश्च वाल्मीकेः ३६ व्यञ्जनपरः पौष्करसादेर्न पूर्वश्च ञकारम् ३७ प्रथमपूर्वो हकारश्चतुर्थं तस्य सस्थानं प्ला-क्षिकौण्डिन्यगौतमपौष्करसादीनाम् ३८ अविकृत एकेषाम् ३९ चतुर्थोऽन्तरे शैत्यायनादीनाम् ४० मीमाँसकानां च मीमाँसकानां च ४१

इति पञ्चमोऽध्यायः

अथ षकारँ सकारविसर्जनीयौ १ स्वानासोदिव्यापोह्यमुकमूमोप्रोत्रीमहि-द्यविपद्यवयहपूर्वः २ असदामासिञ्चँश्च ३ उपसर्गनिष्पूर्वोऽनुदात्ते पदे ४ रासःसप्तेऽग्निर्निर्विदुर्मीढुःपायुभिर्वेःसुमतिर्माकिरीयुरायुराभिःसधिर्नकिस्तका रपरो नित्यम् ५ अथ न ६ अवर्णव्यञ्जनशकुनिपत्नयृतुमृत्युमलिम्लुबृहस्प-तिपूर्वः ७ ऋकाररेफवति ८ अवग्रहः ९ सवस्थानम् १० न धिपूर्वे ११ संतानेभ्यःसप्ताभिःसंमिताँस्तनाँसीतँस्पशःसक्सनिसनिःसनीःसभेयःसत्त्वासस्यायै १२ न स्वरस्पर्धास्तरीमसाहस्त्रसारथिस्फुरन्तीस्तुब्ज्योतिरायुश्चतुःपूर्वस्तो १३ तहाँस्तस्मिंलोकान्विद्वाँस्ताँस्त्रीन्युष्मानूर्ध्वानम्बकानृतूनश्मन्कृणवन्पि-तृननान्कपालाँस्तिष्ठन्नाद्युदात्तेनेमिर्देवान्त्सवनेपशूँस्तकारपरः सकारं प्राकृतो नित्ये प्राकृतो नित्ये १४

इति षष्ठोऽध्यायः

अथ नकारो णकारम् १ षुषूकृधिसुवःसमिन्द्रास्थूर्युरुवाःषट्त्रिग्रामनिषुपूर्वः २ हन्यादुप्यमानं च ३ परीपरिपरीप्रपूर्वः ४ अवर्णव्यवेतोऽपि ५ वाहनौ-ह्यमानोयानमयन्यवेनवञ्च ६ प्रापूर्वश्च ७ इन्द्रोऽयजुःपूर्व एनंकेन ८ नृश्रीपूर्वो मनाः ९ अङ्गानामोनेगानिगानांग्यानियामेन १० रषःपूर्वो हवन्यह्नेहन् ११ रुपूर्वो मयान्यनी १२ वाघाषपूर्वस्तष्टम् १३ थश्च ठम् १४ न तकारपरः १५ नह्यतिनूनंनृत्यन्त्यन्योऽन्याभिरन्यान्यन्तश्चान्तश्च १६

इति सप्तमोऽध्यायः

अथ प्रथमः १ उत्तमपर उत्तमँ सवर्गीयम् २ तृतीयँ स्वरघोषवत्परः ३ ककुञ्च मकारपरः ४ अथ विसर्जनीयः ५ रेफमेतेषु ६ न रेफपरः ७ ह्वारभार्वार्हारबिभरजीगरकरनन्तर्विवःसुवःपुनरहरहःप्रातर्वस्तःशमितःसमितः सनुतस्तनुतस्तोतर्होतःपितर्मातर्यष्टरेष्टर्नेष्टस्त्वष्टः ८ करावरनुदात्ते पदे ९ अन्तरनाद्युदात्ते १० आवृत्परः ११ इतिपरोऽपि १२ अहारहःसुवरनिंग्यान्तः १३ न भिर्भ्यांपरः १४ अँहश्च सर्वेषाम् १५ अनवर्णपूर्वस्तु रेफपरो लुप्यते १६ दीर्घं च पूर्वः १७ एष्टश्च १८ नैकेषाम् १९ द्वावुत्तमोत्तरीयस्य रेफम् २० सांकृत्यस्योकारम् २१ उख्यस्य सपूर्वः २२ कखपकारपरः षमकारपूर्वः समवग्रहः २३ आविर्निरिडःशश्वतोऽपसोदेवरिषोऽँहसोऽतिदिवोविश्वतो-ऽश्मनस्तमसः २४ कृधिपिन्वपथेपरः २५ न सक्रघकारपरे २६ पत्नीवेपती-पतेपतयेपतिष्पतिंपरः २७ दिवःसहसस्परिपुत्परः २८ रायस्पोपरः २९ नम-स्करोपरः ३० वसुष्ककारपरः ३१ नाध्वरंविश्वतोऽन्तर्जातोविविशुःपरुःपुनः ३२ धषवति ३३ परिवाप्रपरः ३४ न निर्ण निः ३५

इत्यष्टमोऽध्यायः

ऊष्मपरोऽघोषपरे लुप्यते काण्डमायनस्य १ अघोषपरस्तस्य सस्थानमूष्माणम् २ न क्षपरः ३ कपवर्गपरश्चाग्निवेश्यवाल्मीक्योः ४ ऊष्मपर एवैकेषामा-चार्याणाम् ५ न प्लाक्षिप्लाक्षायणयोः ६ ओकारमः सर्वोऽकारपरः ७ घोषवत्परश्च ८ अवर्णपूर्वस्तु लुप्यते ९ अथ स्वरपरो यकारम् १० एकारोऽयम् ११ ओकारोऽवम् १२ नाकारपरौ १३ ऐकार आयम् १४ औकार आवम् १५ उकारोऽपृक्तः प्रकृत्या वकारोऽन्तरे १६ न तत्तस्मात्साँहितः १७ ह्रस्वपूर्वो ङकारो द्विवर्णम् १८ नकारश्च १९ अनितिपरो ग्रहोख्ययाज्यापृष्ठ्यहिरण्यव-

र्णीयेष्वीकारोकारपूर्वो रेफमाकारपूर्वश्च यकारम् २० मर्त्यानुदयानमृतान्दुर्या-
नसोमपूर्वः सोऽस्मानविमान्गोमान्मधुमान्हविष्मान्हूतमानार्षेचिकित्वानिडा
वान्कक्षीवान्बाणवान्हिपयस्वान्वशान्विदत्रानमित्रानरान्पोषान्महाँश्च २१ इ-
न्द्रोमेऽकरूढ्वमिहाप्येत्वगन्मेडेन्यानायजिष्ठश्राचर्त्वकुर्वतादुहददितिरग्रेऽधरा
न्त्सपत्नानलंपरश्च २२ न रश्मीञ्छ्रूपयान्यमान्पतङ्गान्त्समानानर्चान्यजीयान् २३
उदथापरश्चोदथापरश्च २४

इति नवमोऽध्यायः

अथैकमुभे १ दीर्घं समानाक्षरे सवर्णपरे २ अथावर्णपूर्वे ३ इवर्णपर एकारम्
४ उवर्णपर ओकारम् ५ एकारैकारपर ऐकारम् ६ ओकारौकारपर औकारम्
७ अरमृकारपरे ८ उपसर्गपूर्व आरम् ९ उदात्तमुदात्तवति १० अनुनासि-
केऽनुनासिकम् ११ स्वरितानुदात्तसंनिपाते स्वरितम् १२ न धामापासिपरी-
बुध्नियाज्यापूषामिनन्तार्षे १३ एष्टेरेतनेमन्नोद्यन्नोष्ठेवःपरो लुप्यते १४ इव-
र्णोकारौ यवकारौ १५ उदात्तयोश्च परोऽनुदात्तः स्वरितम् १६ ऊभावे च १७
न श्येती मिथुनी १८ लुप्येते त्ववर्णपूर्वौ यवकारौ १९ नोख्यस्य २०
वकारस्तु सांकृत्यस्य २१ उकारौकारपरौ लुप्येते माचाकीयस्य २२ लेशो
वात्सप्रस्यैतयोः २३ न प्लुतप्रग्रहौ २४ परश्च परश्च २५

इति दशमोऽध्यायः

लुप्यते त्वकार एकारौकारपूर्वः १ अथालोपः २ धातारातिरुपवाजपेयजुष्ट-
श्येनायोख्यध्रुवक्षितिरियमेवसायाग्निर्मूर्धारुद्रप्रथमोपोत्तमविकर्षविहव्यहि-
रण्यवर्णीययाज्यामहापृष्ठ्ये ३ अँहसोँहतिरनिष्टृतोऽवन्त्वस्मानवद्यादहनि च
४ अनु घर्मासआपोमर्तोरथस्त्वोदत्तेवातःपूर्वः ५ अभिवात्वपश्च ६ अन्वगमञ्च
७ आपःपूर्वोऽद्भिरपांनपादस्मान् ८ रायेसैन्द्रःपूर्वश्चाकारपरे ९ तेपूर्वो-
ऽद्यान्धोऽँशुरग्ने १० मेपूर्वश्च ११ अस्याश्विनापरा च १२ नःपूर्वोऽसदग्निरघा-
न्तमोऽभ्यस्मिन्नद्यपथि १३ नमःपूर्वोऽग्रेऽश्वेभ्योऽग्रियाय १४ आविन्नःसोमः
पूर्वोऽग्निपरः १५ धीरासोऽदब्धासएकादशासऋषीणांपुत्रःशार्यातेऽषाढः पि-
तारःपृथिवीयज्ञआसतेयेगृह्णाम्यग्रेवाँएषजज्ञेसँस्फानोयुवयोर्यःपृष्ठेपतिर्वोगोशुष
मःपुवःसमिद्धऋषभःपाथोवचोवर्षिष्ठेजुषाणोयोरुद्रोवृष्णःपूर्वः १६ अरतिम-
स्ययज्ञस्यातिद्रुतोऽतियन्त्यनृणोऽविष्यन्ननमीवोऽन्नेष्वर्चिरजीतानज्यानिमह्निया

अम्बाल्यर्वन्तमस्त्वकृणोदङ्गिरोऽप्सुयोअस्कभायदच्युतोऽश्वसनिरस्थभिरशिश्रे दङ्गेऽघ्निय १७ अध्वर स्वरपरे १८ स पूर्वस्यार्धसदृशमेकेषामर्धसदृश-मेकेषाम् १९

इत्येकादशोऽध्यायः

अथ लोपः १ असि २ न गर्भःसंनद्धोयमोभद्रःपूर्वः ३ यवनहपरः स्वरपरेषु ४ जकारम्नपर उदात्तः ५ मोवचोदधानस्थेपूर्वश्च ६ अभ्यावर्तिन्नपूपमपिदधा-म्यद्यान्वदितिःशर्माग्नेर्जिह्वामग्नयःपप्रयोऽस्माकमस्मेधत्ताश्माश्वाश्रुतिरश्यामा-मार्यमन्नस्मत्पाशानस्मिन्यज्ञेऽस्ताव्यथमानाभिद्रोहमधाय्यदोऽथोऽदुग्धाअरिष्टा अरथाअर्चन्त्यन्तरस्यामत्रस्थान्नायाङ्गिरस्वदकरम् ७ गाहमानोजायमानोहेत-योमन्यमानोवनस्पतिभ्यःपतेस्विधस्तपसःस्वधावोभामितोऽग्नयअायोऽध्वर्योक्र तोपूर्वः ८ तस्मिन्ननुदात्ते पूर्व उदात्तः स्वरितम् ९ उदात्ते चानुदात्त उदात्तम् १० स्वरितश्च सर्वत्र स्वरितश्च सर्वत्र ११

इति द्वादशोऽध्यायः

अथ मकारलोपः १ रेफोष्मपरः २ यवकारपरश्चैकेषामाचार्याणाम् ३ न सँसामिति रापरः ४ अथ वर्णानाम् ५ ऋकारर्कारेरषपूर्वो नकारो णकारँ समानपदे ६ व्यवेतोऽपि ७ हिरण्मयम् ८ पाणिगणपुण्यकणवका-णगाणबाणवेणुगुणमणिप्रवादेषु पूर्वः ९ पणिपणिंवीयमणऊण्योः १० टवर्गपरः ११ चङ्कणफणत्स्थूणौहिणुयाद्भिणोतिकौणेयोऽणिष्ठा उल्बणमुगणा-श्रुतिश्चुपुणीकाबाणिजायाणवश्चाट्णारस्थाणुंतूणवेवीणायामश्लोणयापणेत-वाणीःकल्याणीकुणपंवाणःशतशोणाश्रुतिर्धाणिकामेणी १२ अवग्रहो वृष-ण्छीर्षण्ब्रह्मण्वण्चर्मण्चर्षण् १३ ऋणषण्ष्णम्णराव्ण चेति प्राकृताः १४ न षुम्नोऽग्निर्युष्मानीतोऽन्तोऽलोपात्स्पर्शपरो व्यवायेषु शसचटतवर्जीयेषु १५ पृक्तस्वरात्परो लो डं पौष्करसादेः पौष्करसादेः १६

इति त्रयोदशोऽध्यायः

स्वरपूर्वं व्यञ्जनं द्विवर्णं व्यञ्जनपरम् १ लवकारपूर्व स्पर्शश्च पौष्करसादेः २ स्पर्श एवैकेषाम्आचार्याणाम् ३ रेफात्परं ४ द्वितीयचतुर्थयोस्तु व्यञ्जनोत्तरयोः पूर्वः ५ रेफपूर्वयोश्च नित्यम् ६ लकारपूर्वे च ७ उपसर्गपाथएषोऽत्याति-

धामपरमभूतेपूर्वेषु छखिभुजेषु च ८ अघोषादूष्मणः परः प्रथमोऽभिनिधान स्पर्शपरात्तस्य सस्थानः ९ अघोषे प्लाक्षेः १० उत्तमपरात्तु प्लाक्षायणस्य ११ प्रथम ऊष्मपरो द्वितीयम् १२ बाडभीकारस्यासस्थानपरः १३ अथ न १४ अवसाने रविसर्जनीयजिह्वामूलीयोपध्मानीयाः १५ ऊष्मा स्वरपरः १६ प्रथमपरश्च प्लाक्षिप्लाक्षायणयोः १७ ऊष्माघोषो हारीतस्य १८ रेफपरश्च हकारः १९ टवर्गश्च तवर्गपरः २० लतवर्गौ यवकारपरौ २१ परश्च २२ सवर्णसवर्गीयपरः २३ नानुत्तम उत्तमपरः २४ अथैकेषामाचार्याणाम् २५ लकारो हशवकारपरः २६ स्पर्श स्पर्शपरः २७ पदान्तश्च व्यञ्जनपरः प्राकृतः २८ उदात्तात्परोऽनुदात्तः स्वरितम् २९ व्यञ्जनान्तर्हितोऽपि ३० नोदात्तस्वरितपरः ३१ नाग्निवेश्यायनस्य ३२ सर्वो नेत्येके सर्वो नेत्येके ३३

इति चतुर्दशोऽध्यायः

नकारस्य रेफोष्मयकारभावाल्लुप्ते च मलोपाच्च पूर्वस्वरोऽनुनास्कः १ नैकेषाम् २ ततस्त्वनुस्वारः ३ स्त्रादिषु चैकपद ऊष्मपरः ४ नान्तविकारात्पूर्वः ५ अप्रग्रहाः समानाक्षराण्यनुनासिकान्येकेषाम् ६ पदं च प्लुतँ शाङ्खायनकाण्डमायनयोः ७ अकारस्तु सँहितायामपि ८ सर्वमेकयमं पूर्वेषाँ सर्वमेकयमं पूर्वेषाम् ९

इति पञ्चदशोऽध्यायः

अथ सकारपराः १ स्त्रशोहपाश पदादयः स्वरपरे २ विकृतेऽपि ३ रापूर्वश्च ४ शँस्तानन्तोदात्ते ५ अशँसन् ६ न शसनं विशसनेन ७ मा पदादिरनुदात्तः ८ पुमीपूर्वश् नित्यम् ९ सकायपरश्च १० नावग्रहपूर्वः ११ मासिमासुमासोमासामिति च १२ हिपुजिगाजिघाछँसिनेऽतँसयदाताँसीत्कनीयाज्यायाद्राघीयारघीयाश्रेयाह्रसीयावसीयाभूयाँसोजघ्निवाजघ्निवाजिगिवाजीगिवातस्थिवादाश्वादीदिवापपिवापीपिवाविद्वाविविशिवाशुश्रुवाससृवा १३ आकारेकारोकाराः सिषिपराः पदान्तयोः १४ विकृतेऽपि १५ अनाकारो ह्रस्वँ सांकृत्यस्य १६ न पदे द्विस्वरे नित्यम् १७ ऋजीषिजिगासिजिघास्यजासियजासिददासिदधासिवर्तयासि च १८ दँसनाभ्योदँसोभिर्दँसंवृषदँशोदँशुकादँष्ट्राभ्यां परः १९ मँस्येमँसतैयँसद्यँसन्वँसतेवँसगः २० उन्न वँशम् २१ अक्रँस्तक्रँस्यतेरँस्यतेभ्रँशते २२ रँह्यै च २३ ऐकार उख्यस्य

नितान्तः २४ विरित्रि संख्यासु २५ शिँशुमारःशिँषत्सँश्वासँस्रासँसृष्ट-सँस्कृत्यसँकृतसँशितसँशिताकिँशिलकिँशिला २६ सितृदृ हकारपरः २७ मँहिष्ठस्य च २८ आदिरँहतिरँहोऽँहोरँहोमुगत्यँहाअँहसोऽँहसाँशमँशुभिरँशभु-वाँश्वँशूअँशवोऽँशुरँशुमँशूनँशुनाँशोरँशायोपाँश्वँशौ २९ अवग्रह उदात्तोऽँसे-ऽँसायाँसाभ्यामँसाविति ३० नासावा नासावा ३१

इति षोडशोऽध्यायः

तीव्रतरमानुनासिक्यमनुस्वारोत्तमेष्विति शैत्यायनः १ समँ सर्वत्रेति कौह-लीपुत्रः २ अनुस्वारेऽणिवति भारद्वाजः ३ नाकारस्य रेफोष्मयकारभावाल्लुप्ते च मलोपाच्चोत्तरमुत्तरं तीव्रतरमिति स्थविरः कौण्डिन्यः ४ व्यञ्जनकालश्च स्वरस्यात्राधिकः ५ स्वारविक्रमयोर्दृढप्रयत्नतरः पौष्करसादेः ६ प्रयत्नवि-शेषात्सर्ववर्णानामिति शैत्यायनः ७

नातिव्यक्तं न चाव्यक्तमेवं वर्णानुदिङ्गयेत्
पयःपूर्णमिवामत्रँ हरन्धिरो यथामति

इत्यात्रेय आत्रेयः ८

इति सप्तदशोऽध्यायः

ओकारं तु प्रणव एकेऽर्धतृतीयमात्रं ब्रुवते १ उदात्तानुदात्तस्वरितानां कस्मिँश्चिदिति शैत्यायनः २ धृतप्रचयः कौण्डिन्यस्य ३ मध्यमेन स वाक्प्रयोगः ४ स्वरितः प्लाक्षिप्लाक्षायणयोः ५ उदात्तो वाल्मीकेः ६ यथाप्रयोगं वा सर्वेषां यथाप्रयोगं वा सर्वेषाम् ७

इत्यष्टादशोऽध्यायः

स्वरितयोर्मध्ये यत्र नीचँ स्यादुदात्तयोर्वान्यतरतो वोदात्तस्वरितयोः स विक्रमः १ प्रचयपूर्वश्च कौण्डिन्यस्य २ द्वियम एके द्वियमपरे ता अणुमात्राः ३ तस्यामेव प्रकृतौ ४ न पूर्वशास्त्रे न पूर्वशास्त्रे ५

इत्येकोनविंशोऽध्यायः

इवर्णोकारयोर्यवकारभावे क्षैप्र उदात्तयोः १ सयकारवकारं त्वक्षरं यत्र स्वर्यते स्थिते पदेऽनुदात्तपूर्वेऽपूर्वे वा नित्य इत्येव जानीयात् २ अपि चेन्नाना-पदस्थमुदात्तमथ चेत्साँहितेन स्वर्यते स प्रातिहतः ३ तस्मादकारलोपेऽभि-निहतः ४ ऊभावे प्रश्लिष्टः ५ पदविवृत्त्यां पादवृत्तः ६ उदात्तपूर्वस्तै-रोव्यञ्जनः ७ इति स्वारनामधेयानि ८ क्षैप्रनित्ययोर्दृढतरः ९ अभिनिहते च १० प्रश्लिष्टप्रातिहतयोर्मृदुतरः ११ तैरोव्यञ्जनपादवृत्तयोरल्पतरोऽल्पतरः १२

इति विंशोऽध्यायः

व्यञ्जनँ स्वराङ्गम् १ तत्परस्वरम् २ अवसितं पूर्वस्य ३ संयोगादि ४ परेण चासँहितम् ५ अनुस्वारः स्वरभक्तिश्च ६ नान्तस्थापरमसवर्णम् ७ नासिक्याः ८ स्पर्शश्चोष्मपर ऊष्मा चेत्परश्च ९ स्वरितात्सँहितायामनुदात्तानां प्रचय उदात्तश्रुतिः १० नोदात्तस्वरितपरः ११ स्पर्शादनुत्तमादुत्तमपरादानु-पूर्व्यान्नासिक्याः १२ तान्यमानेके १३ हकारान्नणमपरान्नासिक्यम् १४ रेफो-ष्मसंयोगे रेफस्वरभक्तिः १५ न क्रमे प्रथमपरे प्रथमपरे १६

इत्येकविंशोऽध्यायः

शब्दः प्रकृतिः सर्ववर्णानाम् १ तस्य रूपान्यत्वे वर्णान्यत्वम् २ तत्र शब्दद्रव्याण्युदाहरिष्यामः ३ वर्णकारौ निर्देशकौ ४ चापीत्यन्वादेशकौ ५ त्वथैवेति विनिवर्तकाधिकारकावधारकाः ६ वेति वैभाषिकः ७ नेति प्रतिषेधकः ८ आयामो दारुण्यमणुना खस्येत्युच्चैःकराणि शब्दस्य ९ अन्व-वसर्गो मार्दवमुरुता खस्येति नीचैःकराणि १० मन्द्रमध्यमताराणि स्थानानि भवन्ति ११ तत्रैकविँशतिर्यमाः १२ ऋग्विरामः पदविरामो विवृत्तिविरामः समानपदविवृत्तिविरामस्त्रिमात्रो द्विमात्र एकमात्रोऽर्धमात्र इत्यानुपूर्व्येण १३ यद्यञ्जनान्तं यदु चापि दीर्घँ संयोगपूर्वं च तथानुनासिकम् एतानि सर्वाणि गुरूणि विद्याच् छेषाण्यतोऽन्यानि ततो लघूनि १४

अव्यञ्जनान्तं यद्ध्रस्वमसंयोगपरं च यत्
अननुस्वारसंयुक्तमेतल्लघु निषोधतै तल्लघु निबोधत १५

इति द्वाविंशोऽध्यायः

अथ वर्णविशेषोत्पत्तिः १

अनुप्रदानात्सँसर्गात्स्थानात्करणविन्ययात्
जायते वर्णवैशेष्यं परिमाणाच्च पञ्चमाद् इति २

वर्णपृक्तः शब्दो वाच उत्पत्तिः ३ सप्त वाच स्थानानि भवन्ति ४ उपाँशु-ध्वाननिमदोपब्दिमन्मन्द्रमध्यमताराणि ५ करणवदशब्दममनःप्रयोगमुपाँशु ६ अक्षरव्यञ्जनानामनुपलब्धिर्ध्वानः ७ उपलब्धिर्निमदः ८ सशब्द-मुपब्दिमत् ९ उरसि मन्द्रं कण्ठे मध्यमँ शिरसि तारम् १० मन्द्रादिषु त्रिषु स्थानेषु सप्तसप्त यमाः ११ कृष्टप्रथमद्वितीयतृतीयचतुर्थमन्द्रातिस्वार्याः १२ तेषां दीप्तिजोपलब्धिः १३ द्वितीयप्रथमकृष्टास्त्रय आह्वारकस्वराः १४ मन्द्रा-दयो द्वितीयान्ताश्चत्वारस्तैत्तिरीयकाः १५ द्वितीयान्मन्द्रस्तैत्तिरीयाणां तृतीय-चतुर्थावनन्तरं तच्चतुर्यममित्याचक्षते १६ तस्मिन्द्वियमान्तरा वृत्तिः १७ तामुपदेक्ष्यामः १८ तच्चतुर्यममित्युक्तम् १९

क्रमिवक्रमसंपन्नामद्रुतामविलम्बिताम्
नीचोच्चस्वारसंपन्नां वदेद्धृतवतीँ समां वदेद्धृतवतीँ समामिति २०

इति त्रयोविंशोऽध्यायः

अथ चतस्रः सँहिताः १ पदसँहिताक्षरसँहिता वर्णसँहिताङ्गसँहिता चेति २ नानापदसंधानसंयोगः पदसँहितेत्यभिधीयते ३ यथास्वमक्षरसँहितादीनाम-प्येवम् ४ गुरुत्वं लघुता साम्यँ ह्रस्वदीर्घप्लुतानि च । लोपागमविकाराश्च प्रकृतिर्विक्रमः क्रमः स्वरितोदात्तनीचत्वँ श्वासो नादोऽङ्गमेव च । एतत्सर्वं तु विज्ञेयं छन्दोभाषामधीयता ५ पदक्रमविशेषज्ञो वर्णक्रमविचक्षणः । स्वरमाम्त्राविभागज्ञो गछेदाचार्यसँसदं गछेदाचार्यसँसदमिति ६

इति चतुर्विंशोऽध्यायः

Credits

Sources: William D. Whitney, *The Taittirīya-Prātiśākhya with its commentary the Tribhāṣyaratna: Text, Translation and Notes*, New Haven, 1863 (repr. delhi 1973).

Typescript: Edited by Makoto Fushimi

Conversion to Devanagari using Vedapad Software by Ralph Bunker

Formatted for Maharishi University of Management Vedic Literature Collection